O Lord! Those who are purified by Your kind glances, their own nature perforce becomes identical with the nature of Śiva, full of the nectar of Brahmā. And this world of misery appears to them as a manifestation of their own 'Self'. 46.

हन्त्री विधात्री जगतोऽपि कर्त्री
कृपैव ते नैव जनस्य बुद्धिः ।
सर्वार्त्तिहन्त्री भवदङ्घ्रिभक्तिः
सापि प्रभो! त्वत्कृपया भवित्री ॥४७॥

*hantrī vidhātrī jagato'pi kartrī*
*kṛpaiva te naiva janasya buddhiḥ /*
*sarvārttihantrī bhavadaṅghribhaktiḥ*
*sāpi prabho! tvatkṛpayā bhavitrī //47//*

हे प्रभु ! आप की कृपा ही जगत की सृष्टि, स्थिति तथा संहार करने में समर्थ है । लोगों की बुद्धि इस (दुर्घट) कार्य को निष्पन्न करने में असमर्थ ही है । आप के चरणों की भक्ति तो सब दुःखों को नष्ट करने वाली है, किन्तु वह भी दास-जनों में आप की कृपा से ही उत्पन्न होती है ॥४७॥

Your Grace alone is capable of creating, maintaining and destroying this objective world. The human intellect is capable of doing so. The devotion towards Your lotus feet, which destroys all evil, is also obtainable through Your Grace alone. 47.

नित्यापरोक्षं तव देव रूपं
प्रकाशमानं परितः पुरस्तात् ।
सर्वादि चाद्यन्तविहीनमेवं
पश्यामि देव! कृपया तवैव ॥४८॥

*nityāparokṣaṁ tava deva rūpaṁ*
*prakāśamānaṁ paritaḥ purastāt /*
*sarvādi cādyantavihīnamevaṁ*
*paśyāmi deva! kṛpayā tavaiva //48//*

हे देव ! आप का नित्य-प्रत्यक्ष-स्वरूप सब ओर से प्रकाशमान ही है। वह स्वरूप सबों का आद्य है एवं स्वयं आदि और अन्त से रहित है। ऐसे आप के स्वरूप को मैं आप की कृपा से ही देखता हूं ॥४८॥

O Lord! Through Your Grace I perceive Your eternal, apparent, universal, beginningless and endless form all around and in front of me. 48.

**स्वाराज्यसाम्राज्यपदप्रदायिने**
**नित्याय शांताय परापरात्मने ।**
**कारुण्यपूरामृतवर्षिदृष्टये**
**श्रीदेशिकायामिततेजसे नमः ॥४९॥**

*svārājyasāmrājyapadapradāyine*
*nityāya śāṅtāya parāparātmane /*
*kāruṇyapūrāmṛtavarṣidṛṣṭaye*
*śrīdeśikāyāmitatejase namaḥ //49//*

जो गुरुदेव स्वात्मराज्य रूपी चक्रवर्ति पदवी को देते हैं, जो नित्य शान्त तथा पर (सूक्ष्म) और अपर (स्थूल) रूप वाले है और जिन की दृष्टि करुणा रूपी अमृत की वर्षा करती है, ऐसे अपरिमित तेज वाले श्रीगुरुदेव को प्रणाम हो ॥४९॥

Salutations unto the Master whose effulgence is immeasurable, who is the bestower of the kingdom of spiritual freedom, who is eternal, the embodiment of peace, greater than

the greatest and whose glances shower the divine nectar full of Grace. 49.

**स्तोतुं त्वां कः समर्थोऽस्ति प्राणबुद्धिप्रवर्तकम् ।**
**किन्तु प्रभोः प्रसादार्थं ममैतद्वाग्विजृम्भणम् ॥५०॥**

*stotuṁ tvāṁ kaḥ samartho'sti prāṇabuddhipravartakam /*
*kintu prabhoḥ prasādārthaṁ mamaitadvāgvijṛmbhaṇam//50//*

प्राण तथा बुद्धि को उत्पन्न करने वाले आप के स्वरूप की स्तुति भला कौन कर सकता है? ऐसी दशा में भी मेरी यह वाणी आप को प्रसन्न करने के लिए स्वयं उछल पड़ी है ॥५०॥

Who has the ability to sing Your praise? You, who bring prāṇa and intellect, the very media for composing hymns into play. Yet I offer these few verses only to propitiate You, O' Lord! 50.

**किं न दत्तं त्वया मह्यं दर्शितं किं न मां पुनः ।**
**तव स्तुतिपरैवेयं वाणी मे भवतात्प्रभो! ॥५१॥**

*kiṁ na dattaṁ tvayā mahyaṁ darśitaṁ kiṁ na māṁ punaḥ /*
*tava stutiparaiveyaṁ vāṇī me bhavatātprabho! //51//*

हे प्रभो ! आप ने मुझे क्या नहीं दिया और क्या नहीं दिखाया? अतः (इस भांति आप के द्वारा अनुगृहीत बनी हुई) मेरी यह वाणी केवलमात्र आप की स्तुति करने में ही लगी रहे (यही प्रार्थना है) ॥५१॥

What is there that You have not given me and that You have not shown me? O' Lord! May my speech be ever engaged in singing Your glory. 51.

**कुत्र नासि कदा नासि भाति किं वा त्वया विना ।**
**स्थितं देवं नमस्यामि सेयमर्चा परा मम ॥५२॥**

*kutra nāsi kadā nāsi bhāti kiṁ vā tvayā vinā /*
*sthitaṁ devaṁ namasyāmi seyamarcā parā mama //52//*

हे गुरुदेव! आप कहां नहीं हैं? कब नहीं हैं? आप के विना प्रकाशित ही क्या होता है? अतः सर्वथा उपलब्ध अर्थात् प्राप्त आप देव की मैं वन्दना करता हूं—यही वन्दना मेरी परा पूजा अर्थात् अभेदमयी पूजा है ॥५२॥

O' Master! Which is that place where You do not exist? At what time are You not existing? And which is that (object) shining separated from You? I bow to such an excellent empowered Lord, this is my supreme worship. 52.

**न यत्र वाणी न मनोऽपि यस्मिन्**
**गुरौ कथञ्चित्क्रमते विशुद्धे ।**
**कथं स्तुतिस्तस्य भवेत्परं स**
**भक्तार्थमद्यास्ति गृहीतरूपः ॥५३॥**

*na yatra vāṇī na mano'pi yasmin*
*gurau kathañcitkramate viśuddhe /*
*kathaṁ stutistasya bhavetparaṁ sa*
*bhaktārthamadyāsti gṛhītarūpaḥ //53//*

जिस विशुद्ध अमायीय गुरुरूप में किसी प्रकार की तथा किसी भी रूप से की गई स्तुति-रूप वाणी पहुँच नहीं पाती है तथा जहां चञ्चल मन की गति भी स्थिर हो जाती है । ऐसा होने पर उस की स्तुति कैसे की जा सकती है? परन्तु उस ऐसी (परशिव-रूप) गुरु-शक्ति ने, भक्तों के हितकार के लिए, आज शरीर धारण किया है ॥५३॥

By which way can we worship that Master in whose pure worship there exists no form of speech or concentration through mind. But on this auspicious day, today, He has adopted the form to benefit His devotees. 53.

येन मानमितिमेयभानतः
संनिवर्त्त्य निजवैभवे शिवे ।
स्थापितोऽस्मि कृपयावलोकित-
स्तं नतोऽस्मि गुरुमेव लक्ष्मणम् ॥५४॥

*yena mānamitimeyabhānataḥ*
*saṁnivarttya nijavaibhave śive /*
*sthāpito'smi kṛpayāvalokita-*
*staṁ nato'smi gurumeva lakṣmaṇam //54//*

जिस गुरु-देव ने अपनी कृपा-पूर्ण दृष्टि से मुझे प्रमेय, प्रमाण और प्रमिति के (झंझट-पूर्ण) अनुभव से एकदम लौटा कर अपने शिव-रूप वैभव में ठहराया है, उन श्रीमान् गुरुदेव लक्ष्मण जी को ही मैं नमस्कार करता हूँ ॥५४॥

I am prostrating only before my Master, Śrī Lakṣmaṇa, beheld by whose grace I have been elevated and established in His own auspicious glory, leaving aside all the variations of limited subjective, objective and cognitive perception of this universe. 54.

सद्यः प्रपन्नजनताहृदयाम्बुजन्म
संबोधयत्यखिलविश्वमयच्छदैर्यत् ।
तद्देशिकाङ्घ्रिजमहो मिहिरायमाणं
शश्वच्चकास्तु सबलाकृति शाश्वतं नः ॥५५॥

*sadyaḥ prapannajanatāhṛdayāmbujanma*
*saṁbodhayatyakhilaviśvamayacchadairyat /*
*taddeśikāṅghrijamaho mihirāyamāṇaṁ*
*śaśvaccakāstu sabalākṛti śāśvataṁ naḥ //55//*

सूर्य के समान आचरण करता हुआ अर्थात् प्रकाश और विकास करने वाला, गुरु-देव के चरण-कमलों से उत्पन्न जो तेज, शरण में आये हुए जनसमूह के हृदयों को अखिल विश्वमय पत्रों के रूप में विकसित करता है, वह शाश्वत-तेज पूर्णरूप से हम सभी भक्तों के हृदयों में सदा चकता रहे॥५५॥

May that all-round splendid radiance/brilliance of my Master remain illuminating and strengthening us, which emanates from His lotus feet, bloom forth this universe with its pure light and spontaneously rises in the hearts of His disciples/devotees. 55.

**हृदम्बुजदिनेशाय मोहारण्यदवाग्नये ।**
**शान्तिरात्रिमृगाङ्काय चिद्रूपगुरवे नमः ॥५६॥**

*hṛdambujadineśāya mohāraṇyadavāgnaye /*
*śāntirātrimṛgāṅkāya cidrūpagurave namaḥ //56//*

जो स्वात्म रूपी गुरुदेव भक्तों के हृदय रूपी कमल को विकसित करने में सूर्य के समान हैं। मोह रूपी भयंकर जंगल को नष्ट करने के लिए जो दावाग्नि अर्थात् जंगल की आग के समान है और भक्तों में विद्यमान भेदप्रथा रूपी अन्धकार को नष्ट करने के लिए शान्ति-रात्रि के पूर्ण चन्द्र के तुल्य ही है, ऐसे चिद्रूप गुरुदेव को नमस्कार हो ॥५६॥

I bow to that supreme conscious Master who is a rising sun to the lotus of the heart, who is a wild fire to the jungle of

infatuation and who is like a moon for the dark night; a means of knowledge to discard the ignorance from the hearts of devotees. 56.

**उपायवनचैत्राय शिवाय शिवयोगिनाम् ।**
**भविनां भुक्तिमुक्त्यर्थं कल्पवृक्षाय ते नमः ॥५७॥**

*upāyavanacaitrāya śivāya śivayoginām /*
*bhavināṁ bhuktimuktyarthaṁ kalpavṛkṣāya te namaḥ //57//*

उपाय रूपी जंगल के लिए जो गुरुदेव चैत्र-मास के समान हैं अर्थात् जैसे चेत महीने के आने पर सभी वन पुष्पित और फलों से युक्त हो जाते हैं, उसी भांति गुरु के संबन्ध से ही सभी उपाय सफल बनते है । जो गुरुदेव शैव-योगियों के लिये कल्याण-रूप शिव-स्वरूप है तथा संसारी जनों को भोग और मोक्ष देने के लिए कल्पवृक्ष के समान मनमांगा फल देते हैं, ऐसे श्रीगुरु को मेरा नमस्कार हो ॥५७॥

I bow to You, my Master, You are the *caitra* month, spring for the orchard of efforts, Śiva to the devotees/seekers of Śiva and the *kalpa* tree – all bestowing – to bring about enjoyment and libations to the worldly people/mortals. 57.

**स्वात्मविश्रांतिदं यस्य दर्शनं भवतापहम् ।**
**नमस्तस्मै स्वतन्त्राय पारतन्त्र्यविनाशिने ॥५८॥**

*svātmaviśrāṅtidaṁ yasya darśanaṁ bhavatāpaham /*
*namastasmai svatantrāya pāratantryavināśine //58//*

जिन गुरुदेव का दर्शन-मात्र संसार के सभी दुखों को दूर करने वाला, स्वात्म-विश्रांति को देने वाला तथा स्वयं स्वातंत्र्य-पूर्ण होकर परतन्त्रता को नष्ट करता है, ऐसे श्रीगुरुदेव को मेरा नमस्कार हो ॥५८॥

Prostration may be to that absolutely free Master, who is the destroyer of dependency and whose *darśana* [presence] cuts asunder all the commotion of this world and restores the peace of the essential self. 58.

आद्यन्तहीनोऽस्ति विभोर्हि यस्य
भातं समस्तं भवमश्नुवानः ।
संकोचशून्यप्रसरत्प्रकाशः
स मे गुरुः केन कथं स्तुतः स्यात् ॥५९॥

*ādyantahīno'sti vibhorhi yasya*
*bhātaṁ samastaṁ bhavamaśnuvānaḥ /*
*saṅkocaśūnyaprasaratprakāśaḥ*
*sa me guruḥ kena kathaṁ stutaḥ syāt //59//*

जिन व्यापक गुरुदेव का प्रकाश संकोच की मलिनता से रहित होकर केवलमात्र प्रकाश का स्वरूप बना है, जो आदि और अन्त से रहित है और जो संपूर्ण संसार को अपने में विलीन कर रहा है, भला ऐसे मेरे तेजस्वी गुरुदेव की स्तुति कैसे और किन साधनों से की जा सकती है? ५९॥

By whom and how may my unique Master be worshipped? Whose infinite and all-pervading divine effulgent light flashes forth pauselessly/incessantly, without limitation and enfolds the entire planet with its radiance. 59.

ॐ

# कोलेत्युपाह्वश्रीजियालालरचिता गुरुपरिचयात्मिका श्रीपादुकास्तुतिः ॥

*OM*

*Koletyupāhvaśrījiyālālaracitā*

*Guruparicayātmikā Śrīpādukāstutiḥ //*

**गौरीपतिं जगन्नाथं सर्वसंकटनाशिनम् ।**
**स्वभक्त्यामृतदातारं मुनीनां हितकारिणम् ॥१॥**
**समावेशरसास्वादपरमाह्लादचेतसाम् ।**
**योगिनां हृदये नित्यं भासमानं चिदात्मकम् ॥२॥**
**गुरूणामपि सर्वेषां गुरुं चैकं जगद्गुरुम् ।**
**नमाम्यहं महादेवं विश्वकल्याणकारिणम् ॥३॥ (तिलकम्)**

*gaurīpatiṁ jagannāthaṁ sarvasaṅkaṭanāśinam /*
*svabhaktyāmṛtadātāraṁ munīnāṁ hitakāriṇam //1//*
*samāveśarasāsvādaparamāhlādacetasām /*
*yogināṁ hṛdaye nityaṁ bhāsamānaṁ cidātmakam //2//*
*gurūṇāmapi sarveṣāṁ guruṁ caikaṁ jagadgurum /*
*namāmyahaṁ mahādevaṁ viśvakalyāṇakāriṇam //3// (tilakam)*

पार्वतीनाथ जगदीश्वर, समस्त दुःखों के नाशक, अपनी भक्ति से मोक्ष देने वाले, ऋषि - मुनि - जनों के हितकारी, शिव-समावेश-रस का आस्वाद करने से जिन योगियों का हृदय परमानन्द-मय बना हुआ होता है ऐसे योगी-जनों के हृदय में प्रकाशित चिदात्मा प्रभु, एवं समस्त गुरुओं के भी एक गुरु विश्वकल्याणकारी महादेव को मैं प्रणाम करता हूँ ॥१,२,३॥

**जयन्ति गुरुदेवानां पादपंकजपांसवः ।**
**यत्संस्पर्शात्तरन्त्येते जनाः संसारसागरम् ॥४॥**

*jayanti gurudevānāṁ pādapaṅkajapāṁsavaḥ /*
*yatsaṁsparśāttarantyete janaḥ saṁsārasāgaram //4//*

श्रीगुरुदेव के चरण-कमलों की धूलि की जय हो अर्थात् वह चरण-कमलों की धूलि परम-उत्कर्षशालिनी है, जिस के स्पर्श-मात्र से ही सांसारिकजन संसार-सागर से पार हो जाते हैं ॥४॥

**यज्जन्मपूतां जगतीं विलोक्य**
**स्वसृष्टिसाफल्यमबोधि धाता ।**
**नमाम्यहं तं गुरुमीश्वराख्यं**
**शिष्यान्समस्ताञ्छिवयन्तमेकम् ॥५॥**

*yajjanmapūtāṁ jagatīṁ vilokya*
*svasṛṣṭisāphalyamabodhi dhātā /*
*namāmyahaṁ taṁ gurumīśvarākhyaṁ*
*śiṣyānsamastāñchivayantamekam //5//*

जिस का जन्म लेने से समस्त त्रिलोकी को पवित्रीभूत देख कर ब्रह्मा जी अपनी जगत्सृष्टि की सफलता समझने लगे, उस अद्वितीय समस्त शिष्यों का कल्याण करने वाले ईश्वर-स्वरूप नाम वाले गुरु-देव को मैं नमस्कार करता हूं ॥५॥

**[1]अरण्यमालिन्युदरात्प्रसूतो**
**[2]नारायणाख्यात् पुरुषोत्तमाच्च ।**
**स्वरूपभूतोऽस्ति य ईश्वरस्य**
**नाम्ना क्रियाभिस्तमहं नमामि ॥६॥**

*[3]araṇyamālinyudarātprasūto*
*[4]nārāyaṇākhyāt puruṣottamācca /*
*svarūpabhūto'sti ya īśvarasya*
*nāmnā kriyābhistamahaṁ namāmi //6//*

---

1 हमारे गुरुदेव के पिता जी का नाम श्रीनारायण जी था ।

2 अरण्यमाली — हमारे गुरुदेव की माता जी का नाम था ।

3 Śrīmatī Araṇyamālī was the name of our Gurudev's mother.

4 Śrī Nārāyaṇa Dāsa was the name of our Gurudev's father.

पुरुषों में श्रेष्ठ नारायण जी से जो अरण्यमाली के गर्भ से उत्पन्न हुआ श्रीलक्ष्मण जी हैं तथा जो नाम तथा क्रिया से ईश्वर-स्वरूप बना हुआ है, उसे मैं प्रणाम करता हूं ॥६॥

**संश्रूय यस्याद्भुतजन्मवार्तां**
**श्रीरामदेवोऽपि गुरुर्गरीयान् ।**
**श्रीवासुदेवस्तुतिपद्यमुच्चै-**
**र्गायन् ननर्ताप्तमहाप्रमोदः ॥७॥**

*saṁśrūya yasyādbhutajanmavārtāṁ*
*śrīrāmadevo'pi gururgarīyān /*
*śrīvāsudevastutipadyamuccair-*
*gāyan nanartāptamahāpramodaḥ //7//*

जिस की अद्भुत जन्म-वार्ता सुनकर सर्वश्रेष्ठ सद्गुरु श्रीरामजी भी भगवान् कृष्ण जी के उत्पन्न होने के समय गाये गये [5]पद्य, उच्च स्वर में गाते हुए आनन्द से विभोर हो कर नाचने लगे ॥७॥

**अदृष्टपूर्वां परिदृश्य तस्य**
**दशां गुरोर्विस्मयमावहन्ती ।**
**संवाददात्री भगिनी शिशोः सा**
**जगाद नामास्य विनिर्दिश त्वम् ॥८॥**

*adṛṣṭapūrvāṁ paridṛśya tasya*
*daśāṁ gurorvismayamāvahantī /*
*saṁvādadātrī bhaginī śiśoḥ sā*
*jagāda nāmāsya vinirdiśa tvam //8//*

इस बालक की जन्मवार्ता सुनाने वाली भगिनी सद्गुरु श्रीराम जी की अदृष्टपूर्वा (पहिले कभी न देखी हुई) एवं आश्चर्य-जनक

---

[5] भगवान् श्रीकृष्ण के जन्म पर गाये गये पद्य ये है—
"घटि मंज़ गाश आव् च्याञ्ये ज़्यणै । जय जय जय जय देवकीनन्दणै ॥"

दशा देख कर श्रीराम जी से कहने लगी कि हे गुरुदेव! इस बालक का क्या नाम होगा? यह कहिए ॥८॥

**न नाम जातस्य मया तु कार्यं**
**कृतास्य संज्ञा विधिनैव पूर्वम् ।**
**रामोऽस्म्यहं लक्ष्मण एष नूनं**
**समागतः साम्प्रतमित्युवाच ॥९॥**

*na nāma jātasya mayā tu kāryaṁ*
*kṛtāsya saṅjñā vidhinaiva pūrvam /*
*ramo'smyahaṁ lakṣmaṇa eṣa nūnaṁ*
*samāgataḥ sāmpratamityuvāca //9//*

तब श्रीराम जी ने उसे उत्तर देते हुए कहा — इस नवजात बालक का नाम भला मैं क्या रखूंगा? विधाता ने तो इस का नाम पहिले ही रखा है । जब मैं राम हूं तो यह अवश्य लक्ष्मण ही पुनः जन्मे हैं ॥९॥

**यथार्थवाणीमवदन्महात्मा**
**भवो भवस्याभ्युदयाय भूतः ।**
**तपस्विना तेन तु पूर्वमेत-**
**च्छिवात्मनाज्ञायि जनैस्तु पश्चात् ॥१०॥**

*yathārthavāṇīmavadanmahātmā*
*bhavo bhavasyābhyudayāya bhūtaḥ /*
*tapasvinā tena tu pūrvametat*
*śivātmanājñāyi janaistu paścāt //10//*

सत्य वाणी को कहते हुए महात्मा श्रीराम जी ने उस संवाददात्री भगिनी से कहा कि यह तो भगवान् शङ्कर ही जगत् का कल्याण करने के लिए प्रकट हुए हैं । इस बात को उन शिव-स्वरूप तपस्वी श्रीराम जी ने पहिले ही अर्थात् बालक के जन्म लेने पर ही

जान लिया था, शेष सभी लोग तो इस बात से बाद में परिचित हुए ॥१०॥

**सत्या कथैषा नतु कल्पनैषा**
**जानाति सर्वोऽपि यतस्तथैनाम् ।**
**अतस्त्वहं लक्ष्मणनामधेयं।**
**नमामि देवं गुरुमद्वितीयम् ॥११॥**

*satyā kathaiṣā natu kalpanaiṣā*
*jānāti sarvo'pi yatastathainām /*
*atastvahaṁ lakṣmaṇanāmadheyaṁ*
*namāmi devaṁ gurumadvitīyam //11//*

(नवजात बालक की) यह संपूर्ण वार्ता सोलह आने सत्य है, कल्पना नहीं है । क्योंकि सारी जनता भी इस बात को उसी रूप में जानती ही है । अतः मैं लक्ष्मण जी नाम वाले अनुपम गुरुदेव को नमस्कार करता हूं ॥११॥

**पदार्पणानुग्रहपूतमस्य**
**कुलं हि सर्वोच्चतया चकास्ति ।**
**कृत्यैश्च तैस्तैः पुनरावभासे**
**नमाम्यहं तं गुरुराजमेकम् ॥१२॥**

*padārpaṇānugrahapūtamasya*
*kulaṁ hi sarvoccatayā cakāsti /*
*kṛtyaiśca taistaiḥ punarāvabhāse*
*namāmyahaṁ taṁ gururājamekam //12//*

मैं उन अलौकिक गुरुराज को नमस्कार करता हूं जिनके पदार्पण रूपी अनुग्रह से पवित्र बना हुआ इन का कुल सब भांति चमकने लगा अर्थात् प्रशंसित हुआ तथा इन के उन अनेक (अद्‌भुत) कृत्यों से यह कुल पुनः प्रकाशित होने लगा ॥१२॥

**आशैशवाद्यो लभते समाधिं**
**योगीन्द्रनाथः स महाप्रभावः ।**
**एतद्धि श्रुत्वा चकिता जनाः स्यु-**
**र्हृष्टाः पुनस्ते विदितप्रभावाः ॥१३॥**

*āśaiśavādyo labhate samādhiṁ*
*yogīndranāthaḥ sa mahāprabhavaḥ /*
*etaddhi śrutvā cakitā janāḥ syur-*
*hṛṣṭāḥ punaste viditaprabhāvāḥ //13//*

महाप्रभावशाली योगीराज हमारे गुरुदेव बाल्य-काल से ही समाधि को प्राप्त करते थे — इस किंवदन्ती को सुन कर सभी लोग आश्चर्य-चकित होते थे, परन्तु पूछे वही लोग प्रत्यक्ष रूप में उस प्रभाव को देख कर अतिहर्षित हो जाते थे ॥१३॥

**समाधिलग्नं विषयैर्विमुक्तं**
**मनोऽस्य भोगेषु नियोजयन्तौ ।**
**कृतप्रयत्नावनवाप्तकामौ**
**शिष्यत्वमेवाधिगतौ गुरू स्वौ ॥१४॥**
**यथा पुरस्तात्पितरौ न शेकतुः**
**सुतस्य बुद्धस्य मनो विचालितुम् ।**
**महात्मनो धैर्यधनस्य योगिनो**
**विरागिणस्तत्त्वगवेषणोद्यतम्॥१५॥** [युगलकम्]

*samādhilagnaṁ viṣayairvimuktaṁ*
*mano'sya bhogeṣu niyojayantau /*
*kṛtaprayatnāvanavāptakāmau*
*śiṣyatvamevādhigatau gurū svau //14//*
*yathā purastatpitarau na śekatuḥ*
*sutasya buddhasya mano vicālitum /*

*mahātmano dhairyadhanasya yogino*
*virāgiṇastattvagaveṣaṇodyatam //15// [yugalakam]*

समाधि के सुख का अनुभव करने में तत्पर इस बालक का मन सांसारिक भोगों में लगाने के लिए यद्यपि इन के माता पिता ने अपनी ओर से भरसक प्रयत्न किया, तथापि ऐसा करने में असफल होने पर दोनों गुरु-तुल्य माता पिता बालक के ही शिष्य बन गये। जैसे पूर्वकाल में महात्मा बुद्धदेव के माता पिता, धैर्य धन वाले, योगी, वैराग्य से संपन्न अपने पुत्र के निर्वाण-तत्त्व की खोज में लगे हुए मन को अपने लक्ष्य से हटा न सके॥१४,१५॥

**महताबकाकोऽस्य गुरुर्गरीयान्**
**परमेष्ठिदेवोऽपि च रामदेवः।**
**रमणो महर्षिर्दृशि चागतोऽस्य**
**तमहं गुरुं नौमि गुरुक्रमस्थम्॥१६॥**

*mahatābakāko'sya gururgarīyān*
*parmeṣṭhidevo'pi ca rāmadevaḥ /*
*ramaṇo maharṣirdṛśi cāgato'sya*
*tamahaṁ guruṁ naumi gurukramastham //16//*

इन हमारे श्रीगुरु के गुरुदेव श्री स्वामी महताब काक जी थे। इन के परम-गुरु श्रीमान् स्वामी रामजी थे। हमारे गुरुमहाराज ने महर्षि रमण-भगवान् के भी दर्शन किए हैं। इस भांति गुरुपरम्परा में अवस्थित श्रीगुरुमहाराज को मैं नमस्कार करता हूं॥१६॥

**कैशोरकाले दृढनिश्चयोऽसौ**
**क्षेत्रं समासादितवांस्तपोऽर्थम्।**
**चकार तत्रैव तपो महात्मा**
**शोकाकुलाभूज्जननी तु तस्मात्॥१७॥**

*kaiśorakāle dṛḍhaniścayo'sau*
*kṣetraṁ samāsāditavāṁstapo'rtham /*

*cakāra tatraiva tapo mahātmā*
*śokākulābhūjjananī tu tasmāt //17//*

हमारे महात्मा गुरुदेव किशोर अवस्था में ही दृढ़-निश्चय वाले बन कर तपस्या करने के लिए (कुपवारा के निकट साधु-गंगा नामक) पुण्य-तीर्थ की ओर चले गए और वहां तपस्या करने लगे। उन के इस व्यवहार से उन की माता शोक से व्याकुल हो गई ॥१७॥

**अक्कानुरोधाद् गुरुणा निवर्तितः**
**प्रत्याजगाम स्वगृहं नवं पुरे।**
**तत्रैव चक्रे वसतिं ह्यनन्तरं**
**नतोऽस्म्यहं तं तपसि स्थितं गुरुम् ॥१८॥**

*akkānurodhād guruṇā nivartitaḥ*
*pratyājagāma svagṛhaṁ navaṁ pure /*
*tatraiva cakre vasatiṁ hyanantaraṁ*
*nato'smyahaṁ taṁ tapasi sthitaṁ gurum //18//*

माता के अनुरोध करने पर श्रीगुरुवर स्वामी महताबकाक जी ने इन्हें उस तीर्थ से लौटाया। तत्पश्चात् हमारे गुरु-देव [पिता के द्वारा एकान्त में शीघ्रतापूर्वक निर्मित] नवीन घर में आ कर एकान्त में रहने लगे। इस भांति तपोनिष्ठ श्रीगुरुदेव को मैं नमस्कार करता हूं ॥१८॥

**वसन् हि तत्र स्वगृहे महात्मा**
**शैवागमाभ्यासरतिं चकार।**
**मुकुन्दराजानकवर्यसूनु-**
**र्महेश्वराख्यो हि गुरुर्गरीयान् ॥१९॥**
**बभूव विद्यागुरुरस्य धीमान्**
**महात्मनः पुण्यव्रतस्य तत्र।**
**सत्पात्रन्यस्तां हि तथा स्वविद्यां**
**संशोभयामास गुरुः स नूनम् ॥२०॥** [युगलकम्]

*vasan hi tatra svagṛhe mahātmā*
*śaivāgamābhyāsaratiṁ cakāra /*
*mukundarājānakavaryasūnur-*
*maheśvarākhyo hi gururgarīyān //19//*
*babhūva vidyāgururasya dhīmān*
*mahātmanaḥ puṇyavratasya tatra /*
*satpātranyastāṁ hi tathā svavidyāṁ*
*saṁśobhayāmāsa guruḥ sa nūnam //20//*

*[yugalakam]*

महात्मा अपने नवीन घर में रहते हुए, शैव-शास्त्रों के अध्ययन में निरत हो गए । हमारे पुण्यात्मा श्रीगुरु-देव के शास्त्र-गुरु श्रीमुकुन्द राज़दान के सुपुत्र बुद्धिमान महामना महेश्वर राज़दान जी थे । उन गुरुवर्यों ने अपनी विद्या को सत्पात्र शिष्य में रख कर अर्थात् उन्हें विद्वान् बना कर निश्चय रूप से उस (अपनी विद्या) को अति सुशोभित किया ॥१९,२०॥

**तस्मात्सुतीर्थाद्विधिवत्तदानीं**
**शैवागमाचार्यकृतानि तानि ।**
**सर्वाणि शास्त्राणि परिश्रमेण**
**पपाठ शीघ्रं गुरुरस्मदीयः ॥२१॥**

*tasmātsutīrthādvidhivattadānīṁ*
*śaivāgamācāryakṛtāni tāni /*
*sarvāṇi śāstrāṇi pariśrameṇa*
*papāṭha śīghraṁ gururasmadīyaḥ //21//*

हमारे गुरुदेव ने उन तीर्थ-स्वरूप सभी शास्त्रों के वेत्ता गुरुदेव से विधि-पूर्वक शैवागम के आचार्यों के द्वारा रचित समस्त शैव-शास्त्रों को अति परिश्रम से तथा अल्प काल में ही पढ़ा ॥२१॥

**तथाविधं तं गुरुमद्वितीयं**
**तथैव शिष्यं स्पृहणीयबुद्धिम् ।**
**मेने स्वसौभाग्यमिव समीक्ष्य**
**परां च शोभां समवाप विद्या ॥२२॥**

*tathāvidhaṁ taṁ gurumadvitīyaṁ*
*tathaiva śiṣyaṁ spṛhaṇīyabuddhim /*
*mene svasaubhāgyamiva samīkṣya*
*parāṁ ca śobhāṁ samavāpa vidyā //22//*

इस प्रकार वैसे अद्वितीय प्रकाण्ड विद्वान् गुरु को तथा उसी भांति सराहनीय बुद्धि वाले शिष्य को देख कर, ऐसा अनुमान किया जाता है कि मानो सरस्वती देवी अपने (भावी उदय रूप) सौभाग्य को देख कर परम-शोभा को प्राप्त हुई ॥२२॥

**सच्छास्त्रविद्यासमलंकृतोऽसौ**
**बभौ यथा खे रविचन्द्रतारकाः ।**
**प्रकाण्डपाण्डित्यविभूषणाभं**
**नमाम्यहं तं विदुषां शिरोमणिम् ॥२३॥**

*sacchāstravidyāsamalaṅkṛto'sau*
*babhau yathā khe ravicandratārakaḥ /*
*prakāṇḍapāṇḍityavibhūṣaṇābhaṁ*
*namāmyahaṁ taṁ viduṣāṁ śiromaṇim //23//*

यह हमारे गुरुवर सत्-शास्त्र अर्थात् शैव-शास्त्र की विद्या के अध्ययन में अलंकृत होकर उसी प्रकार शोभायमान बने, जैसे आकाश में सूर्य, चन्द्रमा तथा नक्षत्र-गण सुशोभित होते हैं। उन्हीं प्रकाण्ड-विद्या के अलंकार बने हुए, एवं विद्वानों के अमूल्य शिरोरत्न गुरुराज को मैं नमस्कार करता हूं ॥२३॥

**व्यतीत्य कंचित्समयं तु तत्र**
**ततो जगामेश्वरपर्वतं हि ।**

**चकार तत्रैव गृहं सुरम्य-**
**मुद्यानमध्ये जलपुष्परम्ये ॥२४॥**

*vyatītya kaṁcitsamayaṁ tu tatra*
*tato jagāmeśvaraparvataṁ hi /*
*cakāra tatraiva gṛhaṁ suramyam-*
*udyānamadhye jalapuṣparamye //24//*

हमारे गुरुदेव वहां कुछ समय रह कर ईश्वर-पर्वत [प्राचिन ईशब्रारू वर्तमान ईशबर] पर चले गये और उन्होंने उसी पर्वतीय-स्थान में जल और फूलों से रमणीय उपवन में सुन्दर भवन का निर्माण किया ॥२४॥

**तदाश्रमस्थानमभूत्प्रसिद्धं**
**नाम्ना तथार्थक्रियया हि रूढम् ।**
**भूस्वर्गमध्ये परमेशधाम**
**तत्र स्थितं नौमि गुरुं परेशम् ॥२५॥**

*tadāśramasthānamabhūtprasiddhaṁ*
*nāmnā tathārthakriyayā hi rūḍhaṁ /*
*bhūsvargamadhye parameśadhāma*
*tatra sthitaṁ naumi guruṁ pareśam //25//*

वह हमारे गुरुदेव का आश्रम 'ईश्वर-आश्रम' नाम से तथा उसके अनुरूप क्रिया अर्थात् ईश्वर सम्बन्धी चर्चा से प्रसिद्ध हुआ । (ऐसा प्रतीत होता है कि) स्वर्ग-तुल्य पृथ्वी पर मानो यह आश्रम परमेश्वर का ही धाम है। उसी में रहने वाले परमेश्वर-स्वरूप गुरु महाराज को मैं प्रणाम करता हूं ॥२५॥

**श्रियः पुरादेव बहिः समीपे**
**ह्यस्याश्रमोऽसौ खलु सर्ववन्द्यः ।**
**जनाश्च यत्रात्मसुखं लभन्ते**
**नमाम्यहं तं गुरुमद्वितीयम् ॥२६॥**

*śriyaḥ purādeva bahiḥ samīpe*
*hyasyāśramo'sau khalu sarvavandyaḥ /*
*janāśca yatrātmasukhaṁ labhante*
*namāmyahaṁ taṁ gurumadvitīyam //26//*

मैं अपने अनुपम सद्गुरु को प्रणाम करता हूं जिनका आश्रम सभी लोगों से पूजित तथा श्रीनगर के समीप (होते हुए भी कोलाहल से दूर) है, जहां जाकर सभी भक्त-जन आत्म-सुख को प्राप्त करते हैं ॥२६॥

**व्यतीतबाल्यो हि गुरुस्तदानीं**
**लब्धप्रतिष्ठश्च तपस्विवर्यैः ।**
**तदाश्रमस्थः शुशुभे यथाहि**
**कैलासपीठोपरि चन्द्रमौलिः ॥२७॥**

*vyatītabālyo hi gurustadānīṁ*
*labdhapratiṣṭhaśca tapasvivaryaiḥ /*
*tadāśramasthaḥ śuśubhe yathāhi*
*kailāsapīṭhopari candramauliḥ //27//*

बाल्य-काल के बीत जाने पर हमारे गुरुदेव ने श्रेष्ठ तपस्वी योगी-जनों से सादर प्राप्त किया । इस आश्रम में रह कर ये वैसे ही शोभायमान हुए जैसे कैलास-पर्वत के शिखर पर चन्द्र-कला-धारी भगवान् शङ्कर शोभित होते हैं ॥२७॥

**पोलैण्डफ्रांसादिफिरंगदेशा-**
**गतस्य लोकस्य सुखेच्छुकस्य ।**
**सुखं समन्तात्कृपया वितन्वते**
**नमो मदीयगुरवेऽतितेजसे ॥२८॥**

*polaiṇḍaphrāṅsādiphiraṅgadeśā-*
*gatasya lokasya sukhecchukasya /*

*sukhaṁ samantātkṛpayā vitanvate*
*namo madīyagurave'titejase //28//*

पोलैंड़ फ्रांस आदि पाश्चात्य-देशों से आये हुए सुख की इच्छा रखने वाले जनों में जो अपनी कृपा से पूर्णरूपतया स्वात्म-सुख का प्रसार करते रहते हैं, ऐसे अति तेजस्वी मेरे गुरुदेव को नमस्कार हो ॥२८॥

**तदाश्रमस्थानमतीवसुन्दरं**
**दिव्यैश्च तैस्तैः सुखसाधनैर्युतम् ।**
**मन्दारतुल्यैस्तरुभिः सुशोभितं**
**मन्ये हि तन्नन्दनमेव भूगतम् ॥२९॥**

*tadāśramasthānamatīvasundaraṁ*
*divyaiśca taistaiḥ sukhasādhanairyutam /*
*mandāratulyaistarubhiḥ suśobhitaṁ*
*manye hi tannandanameva bhūgatam //29//*

वह आश्रम का स्थान भिन्न भिन्न प्रकार के अलौकिक सुख-समग्रियों से युक्त बना हुआ बहुत ही सुन्दर देखने में आता है। मैं तो यही कहूंगा कि मन्दार-वृक्ष के समान वृक्षों से शोभायमान वह आश्रम मानो इन्द्र-देव का नन्दन नामक उद्यान (बगीचा) ही पृथ्वी पर अवतरित हुआ है ॥२९॥

**रक्षीव पश्चादचलो हि तस्य**
**पुरो डलाख्यो विमलः सरोवरः ।**
**भद्रेव कुल्या वहति प्रकर्ष-**
**वेगातिरम्या मधुरं क्वणन्ती ॥३०॥**

*rakṣīva paścādacalo hi tasya*
*puro ḍalākhyo vimalaḥ sarovaraḥ /*
*bhadreva kulyā vahati prakarṣa-*
*vegātiramyā madhuraṁ kvaṇantī //30//*

उस आश्रम के पिछले भाग में पर्वत सन्तरी की भांति मानो रक्षा करता है। इस के अगले भाग में 'ड़ल' नामक निर्मल विशाल सरोवर अवस्थित है। मंगलमयी छोटी सी रमणीक नदी पास में ही अति तीव्रता से मधुर कल-कल-शब्द करती हुई बहती है ॥३०॥

**यदाश्रमे मे प्रतिभाति नून-**
**मुग्रस्वभावं परिहृत्य स्वीयम् ।**
**माधुर्यभावं परिगृह्य नित्यं**
**शान्तानुकूला रचिताञ्जलिश्च ॥३१॥**
**भद्रावहासौ धृतपुष्पहस्ता**
**सौम्यस्वरूपा विनयावनम्रा**
**दासीव प्रेम्णा प्रकृतिः स्थितास्ति**
**तं नौमि देवं प्रकृतीशितारम् ॥३२॥** [युगलकम्]

*yadāśrame me pratibhāti nūnam-*
*ugrasvabhāvaṁ parihṛtya svīyam /*
*mādhuryabhāvaṁ parigṛhya nityaṁ*
*śāntānukūlā racitāñjaliśca //31//*
*bhadrāvahāsau dhṛtapuṣpahastā*
*saumyasvarūpā vinayāvanamrā*
*dāsīva premṇā prakṛtiḥ sthitāsti*
*taṁ naumi devaṁ prakṛtīśitāram //32//* [yugalakam]

मुझे ऐसा प्रतीत होता है कि जिस (हमारे गुरुदेव के) आश्रम में प्रकृति भी अपना भयंकर स्वरूप छोड़ कर मंगलमयी बन कर अपने मधुर-स्वभाव को धारण करती है। सदा शांत और अनुकूल बन कर अञ्जलि बान्ध कर भद्ररूपता (कल्याण-रुपता) का प्रसार करती है और हाथों में फूलों के गुच्छे जैसे ले कर सुन्दर स्वरुप से युक्त तथा विनय से नम्र बनी हुई दासी की भांति स्नेहपूर्वक ठहरी है — उन्हीं प्रकृति पर शासन करने वाले श्रीगुरुदेव को मैं नमस्कार करता हूं ॥३१,३२॥

तदाश्रमे भास्करवासरे तु
महान् भवत्युत्सव एव सर्वदा ।
आयान्ति लोकाः पुरुषाः स्त्रियश्च
शिष्यप्रशिष्याश्च तथान्यभक्ताः ॥३३॥

*tadāśrame bhāskaravāsare tu*
*mahān bhavatyutsava eva sarvadā /*
*āyānti lokaḥ puruṣāḥ striyaśca*
*śiṣyapraśiṣyāśca tathānyabhaktāḥ //33//*

इस आश्रम में प्रति रविवार के दिन निरन्तर रूप से महान् उत्सव ही होता है । इस दिन सभी लोग, पुरुष, स्त्रियां, शिष्य, पशिष्य तथा अन्य भक्त-जन भी आते रहते हैं ॥३३॥

कौतूहलाधिष्ठितमानसा वै
नरस्वरूपास्त्रिदिवौकसश्च ।
सच्छास्त्रव्याख्याश्रवणेप्सया ते
पठन्ति शैवागमपुस्तकानि ॥३४॥
तेषां तु व्याख्यां कुरुते महात्मा
भवन्ति श्रुत्वाथ निवृत्तशङ्काः ।
गच्छन्ति लाभान्वितचेतसोऽपि
भजे गुरुं संशयनाशकं तम् ॥३५॥ [युगलकम्]

*kautūhalādhiṣṭhitamānasā vai*
*narasvarūpāstridivaukasaśca /*
*sacchāstravyākhyāśravaṇepsayā te*
*paṭhanti śaivāgamapustakāni //34//*
*teṣāṁ tu vyākhyāṁ kurute mahātmā*
*bhavanti śrutvātha nivṛttaśaṅkāḥ /*

*gacchanti lābhānvitacetaso'pi*

*bhaje gurum̐ sam̐śayanāśakam̐ tam //35//*

*[yugalakam]*

रविवार के दिन सत्यतः ऐसा प्रतीत होता है कि मन में कुतूहल लिए हुए देवता भी मनुष्य का रूप धारण करके सत्-शास्त्रों की व्याख्या को (गुरु-मुख से) सुनने की इच्छा रखते हुए शैव-शास्त्रों की पुस्तकों का अध्ययन करते हैं ॥३४॥

उन शैव-शास्त्रों की व्याख्या हमारे श्रीगुरु महात्मा करते हैं। उस व्याख्यान को सुन कर उन श्रोताओं की शङ्कायें दूर हो जाती हैं तथा मनो-वाञ्छित लाभ से युक्त हो कर घर चले जाते है। इस भांति संशय-नाशक श्रीगुरु की मैं सेवा करता हूं ॥३५॥

**[6]वैदेशिकाश्चैव फिरङ्गवासिनो**
**ये भारतीया निजराज्यवासिनः।**
**वृद्धाश्च बालास्तरुणाः सुखार्थिनो**
**ज्ञानेच्छुका वा परमार्थकांक्षिणः ॥३६॥**
**आगत्य ते यं शरणाभिकांक्षिण-**
**स्सद्यो लभन्तेऽपि मनोऽभिवाञ्छितम्।**
**जितेन्द्रियं ज्ञाननिधिं तपोधनं**
**नमाम्यहं तं सततं वरप्रदम् ॥३७॥ [युगलकम्]**

*[7]vaideśikāścaiva phiraṅgavāsino*
*ye bhāratīyā nijarājyavāsinaḥ /*
*vṛddhāśca bālāstaruṇā sukhārthino*
*jñānecchukā vā paramārthakāṅkṣiṇaḥ //36//*

---

[6] कुछेक श्लोक इस स्तुतिः में नहीं रखे गये है क्योंकि इन श्लोकों में केवल व्यक्ति विशेष का ही का वर्णन किया गया था।

[7] A few *śloka* have been omitted as they only mentioned association of some individuals with the Ashram.

*āgatya te yaṁ śaraṇābhikāṅkṣiṇas-*
*sadyo labhante'pi mano'bhivāñchitam /*
*jitendriyaṁ jñānanidhiṁ tapodhanaṁ*
*namāmyahaṁ taṁ satataṁ varapradam //37//*

*[yugalakam]*

शरण की इच्छा रखने वाले, विदेशी-जन और अपने ही देश में रहने वाले भारतीय-जन, सुख की अभिलाषा रखने वाले — क्या बूढ़े, क्या बालक, क्या युवक, सभी जन ज्ञान की पिपासा या परमार्थ की अभिलाषा से जिन के पास आकर तत्क्षण मनोवांछित फल को प्राप्त करते हैं, उन्ही इन्द्रियजित, ज्ञान के भंड़ार, तपोधन से युक्त वरदाता श्रीगुरुदेव को मैं सदा प्रणाम करता हूं ॥३६,३७॥

**यं सर्वलोकाः प्रणमन्ति भक्त्या**
**दृष्ट्वा हि यं ते सुखिनो भवन्ति ।**
**स्मर्यते चापि सदा प्रवासिभि-**
**र्नमाम्यहं तं स्वगुरुं महेशम् ॥३८॥**

*yaṁ sarvalokāḥ praṇamanti bhaktyā*
*dṛṣṭvā hi yaṁ te sukhino bhavanti /*
*smaryate cāpi sadā pravāsibhir-*
*namāmyahaṁ taṁ svaguruṁ maheśam //38//*

जिन हमारे गुरुदेव को सभी जन भक्ति से प्रणाम करते है, जिनका दर्शन-मात्र करने से ही सभी सुखी बनते हैं तथा विदेश में वास करने वाले भक्त-जन भी जिनका स्मरण करते रहते हैं, उन्हीं महेश्वर-रूप अपने श्रीगुरु-देव को मैं नमस्कार करता हूं ॥३८॥

**पञ्चशिका साम्बकृता हि येन**
**स्तोत्रावली पूज्यतमोत्पलस्य ।**
**भाषानुवादैः समलंकृते ते**
**तथैव चान्ये बहवोऽपि ग्रन्थाः ॥**

प्रकाशिता लोकहिताय येन
तस्मै नमो मे गुरवे प्रवक्त्रे ॥३९॥

*pañcaśikā sāmbakṛtā hi yena*
*stotrāvalī pūjyatamotpalasya /*
*bhāṣānuvādaiḥ samalaṅkṛte te*
*tathaiva cānye bahavo'pi granthaḥ //*
*prakāśitā lokahitāya yena*
*tasmai namo me gurave pravaktre //39//*

जिन हमारे गुरुदेव ने [भगवान श्रीकृष्ण के पुत्र] श्री साम्ब जी द्वारा रचित 'साम्बपञ्चाशिका' तथा श्रीमान् उत्पलदेव जी द्वारा निर्मित श्री शिवस्तोत्रावली को हिन्दी टीका से अलंकृत किया, और साथ ही अन्य भी बहुतेरे छोटे छोटे ग्रन्थों को लोकोपकार के लिये प्रकाशित किया, उन्हीं प्रवचनशील मेरे गुरुदेव को प्रणाम हो ॥३९॥

श्रीशारदादेशमहार्हरत्नं
श्रीशारदानुग्रहसौम्यपात्रम् ।
देव्या श्रिया चापि विभूषितं तं
नमाम्यहं स्वं गुरुमेव सन्ततम् ॥४०॥

*śrīśāradādeśamahārharatnaṁ*
*śrīśāradānugrahasaumyapātram /*
*devyā śriyā cāpi vibhūṣitaṁ taṁ*
*namāmyahaṁ svaṁ gurumeva santatam //40//*

मैं अपने सदगुरु को निरन्तर रूप से प्रणाम करता हूं, जो श्रीशारदादेश अर्थात् काश्मीर देश के एक अमूल्य रत्न है, सरस्वती देवी के अनुग्रह के सुन्दर पात्र बने है अर्थात् जो तथ्य रूप में विद्वान् हैं तथा जो मोक्ष-लक्ष्मी से अलंकृत हैं ॥४०॥

**शैवादिसच्छात्रमहासमुद्रं**
**निर्मथ्य रत्नानि[8] समुद्धृतानि ।**
**लोकोपकाराय प्रदर्शितानि**
**येनैव देवोऽस्तु स मे सहायः ॥४१॥**

*śaivādisacchātramahāsamudraṁ*
*nirmathya ratnāni[9] samuddhṛtāni /*
*lokopakārāya pradarśitāni*
*yenaiva devo'stu sa me sahāyaḥ //41//*

जिन्होंने शैव-शास्त्र रूपी महान् समुद्र का मन्थन करके उस में से चुने हुए श्लोक रूपी रत्नों को निकाल कर लोकोपकार के लिए प्रकाशित किया, वे ही देव-तुल्य गुरु-देव मेरे सहायक बने रहें ॥४१॥

**सिद्धिप्रदं यस्य निशम्य वाक्यं**
**जडोऽपि मूर्खोऽप्यतिचञ्चलोऽपि ।**
**प्राप्नोति बुद्धिञ्च सुखञ्च शांतिं**
**नमाम्यहं वै निखिलाद्भुतं तम् ॥४२॥**

*siddhipradaṁ yasya niśamya vākyaṁ*
*jaḍo'pi mūrkho'pyaticañcalo'pi /*
*prāpnoti buddhiñca sukhañca śāṅtiṁ*
*namāmyahaṁ vai nikhilādbhutaṁ tam //42//*

जिन गुरुदेव की सिद्धि-प्रदा वाणी सुन कर जड़ अर्थात् मोटी बुद्धि वाला, मूर्ख तथा चञ्चल स्वभाव वाला व्यक्ति (क्रमपूर्वक) बुद्धि,

---

8 'स्तुति-चन्द्रिका तथा क्रमनयप्रदीपिका' — इन दो ग्रन्थों की ओर यहां संकेत किया गया है ।

9 Refers to two texts *'stuti-candrikā'* and *'kramanayapradīpikā'*

सुख और शांति को प्राप्त करता है, उन्हीं सर्वभाव से अद्भुत स्वरूप वाले गुरुदेव को मैं नमस्कार करता हूं ॥४२॥

**जगत्प्रसिद्धं नृवरं मुनीश्वर-**
**माचार्यवर्यं विदुशां वरेण्यम् ।**
**सर्वे गुणा यं हि सदाश्रयन्ति**
**नमाम्यहं तं सकलाश्रयो यः ॥४३॥**

*jagatprasiddhaṁ nṛvaraṁ munīśvaram-*
*ācāryavaryaṁ viduśāṁ vareṇyam /*
*sarve guṇā yaṁ hi sadāśrayanti*
*namāmyahaṁ taṁ sakalāśrayo yaḥ //43//*

जिन जगत में प्रसिद्ध, मनुष्यों में श्रेष्ठ, मुनीश्वर, विद्वानों के द्वारा वन्दनीय परम-उत्कृष्ट आचार्य गुरुदेव को, सभी गुण अपना आश्रय बनाते हैं, उन्हीं सभी के आश्रयदाता गुरुदेव को मैं नमस्कार करता हूं ॥४३॥

**स्निग्धा हि दृष्टिः करुणाभरा च**
**रूपं हि सौम्यं प्रियदर्शनञ्च ।**
**गिरा हि यस्यामृतवर्षिणी च**
**नमाम्यहं तं सततं गुरूत्तमम् ॥४४॥**

*snigdhā hi dṛṣṭiḥ karuṇābharā ca*
*rūpaṁ hi saumyaṁ priyadarśanañca /*
*girā hi yasyāmṛtavarṣiṇī ca*
*namāmyahaṁ taṁ satataṁ gurūttamam //44//*

जिन गुरुवर्य की दृष्टि करुणा से परिपूर्ण तथा स्नेह से भरी हुई है, जो देखने में प्रियदर्शी तथा सौम्य-मूर्ति वाले है तथा जिन की वाणी अमृत की वर्षा करने वाली है, उन्ही उत्तम श्रीगुरुदेव को मैं सदा नमस्कार करता हूं ॥४४॥

गार्हस्थचिन्ताचलितं स्वरूपा-
दुद्वेगमाप्नोति यदा हि चेतः ।
स्मृतिस्तदा यस्य सुखावहा तं
स्थितिप्रदं नौमि गुरुं कृपालुम् ॥४५॥

*gārhasthacintācalitaṁ svarūpad-*
*udvegamāpnoti yadā hi cetaḥ /*
*smṛtistadā yasya sukhāvahā taṁ*
*sthitipradaṁ naumi guruṁ kṛpālum //45//*

गृहस्थ संबन्धी चिन्ताओं से जिस समय मन अपने स्वरूप से विचलित हो कर क्षोभित बनता है, उस समय जिन गुरु-महाराज की स्मृति उसे सुख प्रदान करती है, उन्ही स्थिति-प्रद अर्थात् मन को सावधान बनाने वाले कृपालु गुरु-देव को मैं नमस्कार करता हूं ॥४५॥

यस्य प्रसादान्न भयं न दुःखं
सद्यो भवत्येव सुखञ्च शांतिः ।
नश्यन्ति विघ्नाः परमार्थमार्गे
तं रक्षितारं गुरुमानतोऽस्मि ॥४६॥

*yasya prasādānna bhayaṁ na duḥkhaṁ*
*sadyo bhavatyeva sukhañca śāṅtiḥ /*
*naśyanti vighnāḥ paramārthamārge*
*taṁ rakṣitāraṁ gurumānato'smi //46//*

जिन की दया से मनुष्य के सभी भय तथा दुःख नष्ट हो जाते है तथा तत्क्षण ही सुख और शांति प्राप्त होती है, (इस के अतिरिक्त) परमार्थ-मार्ग में सभी विघ्न दूर हो जाते हैं, उन्ही (सब ओर से) रक्षा करने वाले श्रीगुरुदेव को मैं नत-मस्तक होकर नमस्कार करता हूं ॥४६॥

**गुरुप्रसादाच्च सुखी सदाहं**
**गुरुप्रसादाच्च सदा शिवोऽहम् ।**
**तस्मात्सदा तस्य दयाभिकाङ्क्षी**
**तत्पादपद्मं हि सदाश्रयेऽहम् ॥४७॥**

*guruprasādācca sukhī sadāhaṁ*
*guruprasādācca sadā śivo'ham /*
*tasmātsadā tasya dayābhikāṅkṣī*
*tatpādapadmaṁ hi sadāśraye'ham //47//*

गुरु-कृपा के फल-स्वरूप मैं सदा सुखी हूं । गुरु-कृपा के द्वारा ही मैं शिवावस्था पर ठहरा हुआ हूं । अतः गुरुदेव की दया की अभिलाषा से मैं उन के चरण-कमलों का ही सदा आश्रय लेता हूं ॥४७॥

**नमाम्यहं श्रीगुरुपादुकाद्वयं**
**नमाम्यहं श्रीगुरुदेवनाम ।**
**करोम्यहं श्रीगुरुपादपूजनं**
**भजाम्यहं तं सततं शरण्यम् ॥४८॥**

*namāmyahaṁ śrīgurupādukādvayaṁ*
*namāmyahaṁ śrīgurudevanāma /*
*karomyahaṁ śrīgurupādapūjanaṁ*
*bhajāmyahaṁ taṁ satataṁ śaraṇyam //48//*

मैं श्रीगुरु-देव की पादुका को नमस्कार करता हूं । मैं श्रीगुरु-देन का नाम सदा जपता रहता हूं । मैं श्रीगुरु-देव के चरणों की पूजा करता रहता हूं तथा उन्हीं शरणदाता का मैं सदा भजन करता रहता हूं ॥४८॥

**या कापि नारी गुरुभक्तियुक्ता**
**पठिष्यति स्तोत्रमिदञ्च पुण्यम् ।**

**सौभाग्यवत्येव सदा लसन्ती**
**भवेत्सतीनामपि सा हि मुख्या ॥४९॥**

*yā kāpi nārī gurubhaktiyuktā*
*paṭhiṣyati stotramidañca puṇyam /*
*saubhāgyavatyeva sadā lasantī*
*bhavetsatīnāmapi sā hi mukhyā //49//*

गुरु-भक्ति से संपन्न बनी हुई जो भी कोई स्त्री इस पुण्य-स्तोत्र का पाठ करेगी, वह सौभाग्यवती बन कर सदा प्रफुल्लित रहेगी तथा सभी पतिव्रता स्त्रियों में श्रेष्ठ मानी जायेगी ॥४९॥

**भवन्तु सर्वे गुरुदेवशिष्या**
**धर्मप्रियाः पापपराङ्गमुखाश्च ।**
**दया सदास्मासु चकास्ति यस्य**
**नमाम्यहं तं गुरुवर्यमीशम् ॥५०॥**

*bhavantu sarve gurudevaśiṣyā*
*dharmapriyaḥ pāpaparāṅgamukhāśca /*
*dayā sadāsmāsu cakāsti yasya*
*namāmyahaṁ taṁ guruvaryamīśam //50//*

हमारे गुरु-देव के सभी शिष्य धर्म में प्रीति रखने वाले तथा पाप से दूर रहने वाले बनें। जिन की दया सदा हमारे पर बनी रहती है, ऐसे ईश्वर-तुल्य सद्गुरु को मैं नमस्कार करता हूं ॥५०॥

**जयति श्रीगुरोरेष प्रादुर्भावदिनोत्सवः ।**
**समागता जना यस्मिन् भवन्ति विमलाशयाः ॥५१॥**

*jayati śrīguroreṣa prādurbhāvadinotsavaḥ /*
*samāgatā janā yasmin bhavanti vimalāśayāḥ //51//*

श्रीगुरु-देव के उस महान् जन्मोत्सव की जय हो, जिस शुभदिवस पर एकत्रित हुए सभी भक्त-जन निर्मल तथा आनन्द-पूर्ण हृदय वाले बन जाते है ॥५१॥

समाप्ता चेयं गुरुपरिचयात्मिका श्रीपादुकास्तुतिः ।

इति शिवम् ।

*samāptā ceyaṁ guruparicayātmikā śrīpādukāstutiḥ /*

*iti śivam /*

ओं
श्रीगुरवे नमः ।

इमानि पद्यपुष्पाणि सदाह्लादकराण्यतः ।
लभन्तां स्वीयसाफल्यं गुरुपूजामहोत्सवे ॥ १

गुरुशक्तिर्जयत्येका मद्रूपप्राविकासिका ।
स्वरूपगोपनव्यग्रा शिवशक्तिर्जिता यया ॥ २ ।

यस्य प्रसादादहमेव शंभु-
र्यस्य प्रसादादहमेव चेश्वरः ।
यस्य प्रसादादहमेव सर्व-
स्तस्मै नमः श्रीगुरवे शिवाय ॥ ३ ॥

शैवप्रजाः स्रष्टुमना महेशो
गुरुक्रमेऽभून्मनुदेवरूपः ।
स्तुमो गुरुं तं परमेष्ठिरूपं
साक्षाच्छिवं श्रीमनुदेवमेव ॥ ४ ॥

विकल्पशान्त्यर्थमिव प्रवृत्ता-
च्छास्त्रात्सदादूरतमस्वभावे ।
संवित्स्वभावे परिवर्तमानो
दृष्ट्यैव शिष्यानकरोत्स शंभून् ॥ ५ ॥

तात्सिद्धपादप्रभवत्प्रकाशो
माहेश्वरोऽवाप्तशिवात्मभावः ।
श्रीमानभूद्राम इति प्रसिद्धो
यो मद्गुरोः कौलिकदेशिकेन्द्रः ॥६॥

ज्येष्ठोऽप्यसौ मद्गुरुजन्मजात-
हर्षोल्लसद्विस्मृतदेहभावः ।
रामोऽस्म्यहं लक्ष्मण एष जात
इत्येव गायन् सहसा ननर्त ॥७॥

शिष्यान् समुद्बोधयितुं स नित्यं
सनातनं स्वस्य शिवस्वभावम् ।
प्रादर्शयद्देहगतं समक्षं
होराश्चतस्रोऽधिगतः समाधिम् ॥८॥

कृत्यं विधेयस्य जनस्य शेषं
सप्ताब्दकल्पस्य च लक्ष्मणस्य ।
शिष्यं सतीर्थ्यं महतावकाकं
निर्दिश्य सोऽगान्निजधाम शैवम् ॥९॥

न लक्षणं यस्य न योऽस्ति लक्ष्यः
षडध्वनो योऽस्ति च लक्ष्मभूतः ।
यो लक्ष्मणस्यैव च लक्ष्मणस्य
रामो गुरू राम इव स्तुमस्तम् ॥१०॥

बिभर्त्ति स्वस्मिन् स्वविमर्शशक्त्या
सर्गस्थितिध्वंसमनारतं यः ।

तमच्छमच्छिन्नमनन्तरूपं
श्रीलक्ष्मणारण्यं प्रणमामि नित्यम् ॥ ११ ॥

प्रकाशरूपस्य चिदात्मनस्ते
स्वातंत्र्यमेतन्नहि किंचिदन्यत् ।
शिवादिपृथ्व्यन्तसमस्तविश्व-
रूपेण चैकोऽपि विभासि यत्त्वम् ॥ १२ ॥

त्वय्येव भातः स्मृतिविस्मृती ते
द्वयोरपि त्वं स्वयमेव भासि ।
तथापि सौमुख्यसुखाभिवर्षिणी
स्मृतिः प्रिया ते नहि विस्मृतिर्मे ॥ १३ ॥

वाचा कया त्वामहमीप्रामीडे
प्रसादये त्वां क्रियया कया वा ।
यतः सदान्तर्मुखभास्वरूपो
न मायिकं पश्यसि किंचिदेतत् ॥ १४ ॥

स्तुवन्नपि त्वामहमेमि सद्यः
परामृताधायि चमत्कृतिं ते ।
तथाप्यविच्छिन्नसुखैकधाम
याचे स्वभावं त्वदकृत्रिमं तम् ॥ १५ ॥

तस्याप्रतर्क्यविभवस्य महेश्वरस्य
पादौ नमामि नयनामृतलक्ष्मणस्य ।
देवस्य यस्य महतः करुणाकटाक्षै-
रालोकितोऽहमिह विश्ववपुर्विभामि ॥ १६ ॥

प्रत्यात्मभूतः परमात्मरूपो
नित्यः शिवः सर्वसुलक्षणोऽसि ।
लोकैरलक्ष्यो विदुषामिलक्ष्यो
विलक्षणो लक्ष्मण उच्यसे त्वम् ॥ १७ ॥

अनन्तशास्त्रोदधिमन्थनाप्यं
यदात्मतत्त्वं परमामृताख्यम् ।
तद्वर्षिणी यस्य कृपाङ्गदृष्टिः
स त्वं शरण्यः शरणं ममासि ॥ १८ ॥

शिष्यानने काम् जगतः समुद्धरन्
नासीत्पुरा गुप्तगुरुर्गरीयान् ।
यो लक्ष्मणो लक्ष्मण एष नो गुरुः
पायात्समस्तान् शरणागतान् सः ॥ १९ ॥

शिवस्वरूपोऽपि जगत्स्वरूपः
स्वात्मस्वरूपोऽपि परस्वरूपः ।
नित्योऽपि यो नित्यमनित्यरूप-
स्तस्मै नमः श्रीगुरवेऽद्भुताय ॥२० ॥

दृष्टप्रभावं परिमुच्य देवं
स्तूयात्कथं दासजनः परेशम् ।
युष्मत्कृपापांगनिपीतपापा
भवन्ति सद्यः पशवो महेशाः ॥ २१ ॥

किं वर्णयामो महतां नु तेषां
भाग्यं भवत्पादरजोऽनुरागिणाम् ।
पुण्यातिसंभारशतैरदृष्टयो
येषां भवान् दृक्पथगोचरः शिवः ॥ २२

नुमः शारिकया जुष्टं प्रभया परिसेवितम् ।
गुरुरूपधरं देवं लक्ष्मणं शान्तविग्रहम् ॥२३॥
श्रीगुरुं तमहं वन्दे कारुण्यरसनिर्भरम् ।
स्वात्मभूतं जगद्भाति यत्कृपापाङ्गपाततः ॥२४॥
जयत्येको जगत्यस्मिन् गुरुर्मे भोगमोक्षदः ।
मोक्षलक्ष्मीसमाश्लिष्ट जन्मतो यश्च लक्ष्मणः ॥२५॥
नमः श्रीमहसे तस्मै स्वात्मसाम्राज्यदायिने ।
भवबन्धच्छिदे दृष्ट्या नररूपाय शूलिने ॥२६॥
वाचा दृशा तथा कृत्या स्वानन्दरसपूर्णया ।
आह्लादं परमं यच्छन् गुरुः केनोपमीयताम् ॥२७॥
स्वानन्दरसकल्लोलैरुल्लसन्नस्म्यहर्निशम् ।
यद्दृष्टिपरिपूतोऽहमाश्रये तत्पदद्वयम् ॥२८॥
निखिलैरिन्द्रियैरेभिर्भिन्नवेद्यप्रदर्शिभिः ।
दर्शितः शिव एवैको येन तस्मै नमो नमः ॥२९॥
स्वात्मावमर्शसंलग्ना परासहितवैखरी ।
कृता येन गुरोस्तस्य वाचा कुर्यां स्तुतिं कया ॥३०॥
गुरुस्तुतिपरैवेयं परासहितवैखरी ।
इत्येवं जानतो मे वाक् का न स्तौति गुरुं कदा ॥३१॥
मनसा वचसा कृत्या शरण्यं साध्वसापहम् ।
भवं भवार्त्तिहं वन्दे सद्गुरुं लक्ष्मणाभिधम् ॥३२॥
शांकरी शुद्धविद्येव पूर्णकारुण्यनिर्भरा ।
सर्वैश्वर्यप्रदा देवी जयति श्रीगुरुकृपा ॥३३॥
नुमो गुरुं महाकालजन्मग्रासावभासकम् ।
स्वातंत्र्योद्भासिताशेषघस्मरं लक्ष्मणं प्रभुम् ॥३४॥

किमनेन बहूक्तेन द्वैतरूपं निरस्य वै ।
वन्द्यते सद्गुरुः साक्षाल्लक्ष्मणः स शिवोऽद्वयः ॥३५॥
नमः श्रीगुरवे नित्यं जगत्कल्याणकांक्षिणे ।
जगद्वन्द्यैकरूपाय जगद्रूपाय शम्भवे ॥ ३६ ॥
दीनोद्धारैककृत्याय करुणागाधासिन्धवे ।
अनेकशीलसत्काय लक्ष्मणाय नमस्तमाम् ॥३७॥

यस्यां च सत्यामहमेव भामि
सर्वात्मना सर्वविकल्पहीनः ।
यत्नैरलभ्यामतिदुर्लभां तां
श्रीसद्गुरोर्नौमि दयार्द्रदृष्टिम् ॥ ३८ ॥

आज्ञा यदीया तु कृपात्मिकैव
स्पन्दात्मिका कालकलाऽत्यतीता ।
उन्मेषनामास्ति निमेषगर्भा
बिन्द्वात्मिका नादकलास्वरूपा ॥ ३९ ॥

विमर्शरूपा समनात्मिका या
प्रकाशजातापि तदात्मिकैव ।
तं नौमि देवं विदुषां वरेण्यं
श्रीलक्ष्मणं व्यक्तसमस्तलक्षणम् ॥४०॥

द्रष्टुं स्वकीयपदपंकजमद्वितीय-
दृष्टिस्त्वयैव विहितात्र न संशयो मे ।
किंतु प्रभो यदनयैव समस्तविश्वं
पश्याम्यतः सकलमेव भवत्स्वरूपम् ॥४१॥

आमोदयन्ति हृदयं परितः परागाः
पीयूषवर्षिकिरणै रसयन्ति चन्द्राः ।
देव त्वदीयपदपंकजमेति यस्य
स्वान्ते तु तस्य मधुराश्च दिशो भवन्ति ॥ ४२ ॥

जानाति सौरभ्यं पदपंकजस्य
चेतो मदीयं न भवानपीश ।
मुक्त्वा द्विरेफं मकरन्द सौरभ्यं
न वेत्तुमीष्टे कमलाकरोऽपि ॥ ४३ ॥

अनन्तजन्मार्जितपुण्यराशेः
फलं त्वदीय स्मृतिगोचरत्वम् ।
लब्धस्य मे देव सदैव चेतो
विलोकितुं वाञ्छति तेऽङ्घ्रि-पद्मम् ॥ ४४ ॥

देव त्वदीयकरुणावरुणालयस्य
कल्लोलशीकरसुसेचनशांततृष्णः ।
नीतस्त्वया धृतकरोऽन्ध इवाहमीश
संकल्पपंकबहुदूरपथे प्रयामि ॥ ४५ ॥

स्वातंत्र्यशक्तिस्तव चित्ररूपा
निर्माति सर्वं ननु यद्विभाति ।
यथेच्छासि त्र्यम्बक तथा भवन् सन्
भवन्तमेवानुगतोऽस्ति सर्वः ॥ ४६ ॥

क्रियां च कालं करणं कलां च
योऽपेक्षते कृत्याविधौ न किंचित् ।

कुर्वन्न चाप्नोति च कर्तृभावं
नुमो गुरुं तं करुणैकमूर्त्तिम् ॥ ४७ ॥

ब्रह्मामृतास्वादशिवस्वभावः
स्वीयस्वभावो भवति प्रसह्य ।
पूतस्य ते देव कृपाकटाक्षै-
र्भवोऽपि स्वोद्भूततया विभाति ॥ ४८ ॥

हन्त्री विधात्री जगतोऽपि कर्त्री
कृपैव ते नैव जनस्य बुद्धिः ।
सर्वार्त्तिहन्त्री भवदङ्घ्रिभक्तिः
सापि प्रभो त्वत्कृपया भवित्री ॥ ४९ ॥

नित्यापरोक्षं तव देव रूपं
प्रकाशमानं परितः पुरस्तात् ।
सर्वादि चाद्यन्तविहीनमेवं
पश्यामि देव कृपया तवैव ॥ ५० ॥

स्तोतुं त्वां कः समर्थोऽस्ति प्राणबुद्धिप्रवर्तकम् ।
किंतु प्रभोः प्रसादार्थं ममैतद्वाग्विजृम्भणम् ॥ ५१ ॥

किन्न दत्तं त्वया मह्यं दर्शितं किन्न मां पुनः ।
तव स्तुतिपदैरेवेयं वाणी मे भवतात्प्रभो ॥ ५२ ॥

कुत्र नासि कदा नासि भाति किं वा त्वया विना ।
स्थितं देवं नमस्यामि सेयमर्चा परा मम ॥ ५३ ॥

श्रीगुरुपदनखजन्मा
जन्मान्धस्यापि प्रकाशयन्नर्थान् ।
स जयति कोऽपि विकासः
प्रकाशमानोऽनवच्छिन्नः ॥ ५४ ॥

---

[स्तोत्रपाठानुक्रमणिका]

[ stotrapāṭhānukramaṇikā ]

This precious book contains sacred verses (*stotras*) which our dear Gurudev, His Holiness Shaivacharya Swami Lakshmanjoo Maharaj, held in high esteem throughout his life.

*Stotras*, composed by the illustrious Shaiva Masters: Shaivacharya Abhinavagupta, Utpaladeva, Shivanadanatha, Ksemarāja and others, contain the essence of the teachings of Kashmir Shaivism.

Shri Gurustuti "Hymns of praise to the Master," was composed in the early 1960's by Acharya Rameshvara Jha. Additional verses composed by Sh Jia Lal Kaul were included to make it comprehensive. The Gurustuti has since been recited regularly by devotees.

Ishwar Ashram Trust is blessed to bring out the present edition of Shri Gurustuti Pūja Book with English and Hindi translation. By the grace of Guru Maharāj, devotees throughout India and abroad will benefit from these recitations.

Jai Gurudev
Ishwar Ashram Trust

₹:450.00